ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥1.1.49 ।
सहायं वरयामास मारीचं नाम राक्षसम् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  ततो ज्ञातिविधं श्रुत्वा रावणः क्रोधमूर्च्छितः अभवत्। (सः) मारीचं नम राक्षसं सहायं वरयामास ॥

- अन्वयार्थः

  तदनन्तरं ज्ञातिजनानां हत्याम् आकर्ण्य कोपेन मूर्च्छितः मारीच इति प्रसिद्धम् असुरं सहायतां याचितवान्।

# ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥1.1.49 ।
# सहायं वरयामास मारीचं नाम राक्षसम् ।

- पदपरिचयः
  - ततः – तद्धितान्तम् अव्ययम्।
  - ज्ञातिवधं, सहायं, मारीचं,राक्षसम् – ज्ञातिवध, सहाय, मारीच, राक्षस – पुं, द्वितीया, एकवचनम्।
  - श्रुत्वा – क्त्वान्तम् अव्ययम्।
  - रावणः, क्रोधमूर्छितः – रावण, क्रोधमूर्छित – पुं, प्रथमा, एकवचनम्।
  - नाम – अव्ययम्।
  - वरयामास – वृञ् – वरणे+णिच्, कर्तरि, लिट्, प्रपु, एकवचनम्।

# वार्यमाणस्सुबहुशो मारीचेन स रावणः ॥1.1.50॥
# न विरोधो बलवता क्षमो रावण तेन ते ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

    रावण ! बलवता तेन ते विरोधः न क्षमः (इत्येवं) मारीचेन सुबहुशः वार्यमाणः सः रावणः ।

- अन्वयार्थः

    हे रावण ! शक्तिमता तेन (रामेण) तव द्रोहः न उचितः मारीचाख्येन राक्षसेन भूयो भूयः निवारितः सः दशाननः ।

वार्यमाणस्सुबहुशो मारीचेन स रावणः ॥1.1.50॥
न विरोधो बलवता क्षमो रावण तेन ते ।

- पदपरिचयः
  - वार्यमाणः, रावणः, विरोधः, क्षमः – वार्यमाण, रावण, विरोध, क्षम – पुं, प्रथमा, एकवचनम् ।
  - सुबहुशः – सुबहुशस् – अव्ययम् ।
  - मारीचेन – मारीच – पुं, तृतीया, एकवचनम् ।
  - सः - तद् – (सर्वनाम) पुं, प्रथमा, एकवचनम् ।
  - न – अव्ययम् ।
  - बलवता – बलवत् – पुं, तृतीया, एकवचनम् ।
  - तेन – तद् – (सर्वनाम) पुं तृतीया, एकवचनम् ।
  - ते – तद् – (सर्वनाम) पुं, षष्ठी, एकवचनम् ।

# अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥1.1.51 ॥
# जगाम सहमारीचस्तस्याश्रमपदं तदा ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  रावणः कालचोदितः (सन्) तद्वाक्यम् अनादृत्य तदा सहमारीचः तस्य आश्रमपदं जगाम।
- अन्वयार्थः

  दशाननः मृत्युना प्रेरितः (सन्) तद्वचनम् उपेक्ष्य तदानीं मारीचेन सह रामस्य आवासस्थानम् अगच्छत्।

# अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥1.1.51 ॥
# जगाम सहमारीचस्तस्याश्रमपदं तदा ।

- पदपरिचयः
  - अनादृत्य – ल्यबन्तम् अव्ययम्।
  - तु – अव्ययम्।
  - तद्वाक्यम्, आश्रमपदम् – तद्वाक्य, आश्रमपद – नपुं, द्वितीया, एकवचनम्।
  - रावणः, कालचोदितः, सहमारीचः – रावण, कालचोदित, सहमारीच – पुं, प्रथमा, एकवचनम्।
  - तस्य – तद् – (सर्वनाम) पुं, षष्ठी, एकवचनम्।
  - तदा – तद्धितान्तम् अव्ययम्।
  - जगाम – गमऌ – गतौ, कर्तरि, लिट्, प्रपु, एकवचनम्।

## तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥1.1.52॥
## जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  (रावणः) तेन मायाविना नृपात्मजौ दूरम् अपवाह्य गृध्रं जटायुषं हत्वा रामस्य भार्यां जहार।
- अन्वयार्थः

  तेन मायिकेन राजपुत्रौदूरदेशम् अपसार्य जटायुषनामकं गृध्रं मारयित्वा रामस्य पत्नीम् अपहृतवान्।

# तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥1.1.52॥
# जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ।

- पदपरिचयः
  - तेन – तद् – (सर्वनाम) पुं, तृतीया, एकवचनम्।
  - मायाविना – मायाविन् – पुं, तृतीया, एकवचनम्।
  - दूरम् – दूर – नपुं, द्वितीया, एकवचनम्।
  - गृध्रम् - गृध्र – पुं, द्वितीया, एकवचनम्।
  - हत्वा – क्त्वान्तम् अव्ययम्।
  - अपवाह्य – ल्यबन्तम् अव्ययम्।
  - नृपात्मजौ – नृपात्मज – पुं, द्वितीया, द्विवचनम्।
  - रामस्य – राम – पुं, षष्ठी, एकवचनम्।
  - भार्याम् – भार्या – स्त्री, द्वितीया, एकवचनम्।
  - जहार – हृञ् – हरणे, कर्तरि, लिट्, प्रपु, एकवचनम्।

गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥1.1.53 ।
राघवश्शोकसन्तप्तो विललापाकुलेन्द्रियः ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  गृध्रं च निहतं दृष्ट्वा मैथिलीं च हृतां श्रुत्वा शोकसन्तप्तः आकुलेन्द्रियः राघवः विललाप।
- अन्वयार्थः

  दाक्षाय्यं च मरणासन्नम् अवलोक्य सीताम् अपि चोरिताम् आकर्ण्य दुःखितः व्यथितः रामः रुरोद।

# गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥1.1.53 ।
# राघवश्शोकसन्तप्तो विललापाकुलेन्द्रियः ।

- पदपरिचयः
  - गृध्रं, निहतम् – गृध्र, निहत – पुं, द्वितीया, एकवचनम्।
  - च – अव्ययम्।
  - हृताम् – हृता – स्त्री, द्वितीया, एकवचनम्।
  - दृष्ट्वा, श्रुत्वा – क्त्वान्तम् अव्ययम्।
  - मैथिलीम् – मैथिली – स्त्री, द्वितीया, एकवचनम्।
  - राघवः, शोकसंतप्तः, आकुलेन्द्रियः – राघव, शोकसंतप्त, आकुलेन्द्रिय – पुं, प्रथमा, एकवचनम्।
  - विललाप – वि+लप – व्यक्तायां वाचि, कर्तरि, लिट्, प्रपु, एकवचनम्।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

## ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥1.1.54॥
## मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
## कबन्धन्नाम रूपेण विकृतं घोरदर्शनम् ॥1.1.55॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

ततः तेनैव शोकेन (युक्तः राघवः) गृध्रं जटायुषं दग्ध्वा वने सीतां मार्गमाणः रूपेण विकृतं घोरदर्शनं कबन्धं नाम राक्षसं सन्ददर्श ह ।

- अन्वयार्थः

तदनन्तरं तेन एव दुःखेन रामः दाक्षाय्यं जटायुष्-नामानम् अग्नये समर्प्य विपिने मैथिलीम् अन्विष्यन् भयोत्पादकम् आकारेण विक्रुतिसम्पन्नं कबन्धनामकं दानवम् अवलोकितवान् ।

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥1.1.54॥
मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
कबन्धन्नाम रूपेण विकृतं घोरदर्शनम् ॥1.1.55॥

- पदपरिचयः
  - ततः – तद्धितान्तम् अव्ययम्।
  - तेन – तद्- (सर्वनाम) पुं, तृतीया, एकवचनम्।
  - एव, ह, नाम – अव्ययम्।
  - शोकेन – शोक – पुं, तृतीया, एकवचनम्।
  - गृध्रं, राक्षसं, कबन्धं, विकृतं, घोरदर्शनम् – गृध्र, राक्षस, कबन्ध, विकृत, घोरदर्शन – पुं, द्वितीया, एकवचनम्।
  - दग्ध्वा – क्त्वान्तम् अव्ययम्।
  - मार्गमाणः – मार्गमाण – पुं, प्रथमा, एकवचनम्।
  - वने – वन – नपुं, सप्तमी, एकवचनम्।
  - सीताम् – सीता – स्त्री, द्वितीया, एकवचनम्।
  - रूपेण – रूप – नपुं, तृतीया, एकवचनम्।
  - जटायुषम् – जटायुष् – पुं, द्वितीया, एकवचनम्।
  - संददर्श – सम्+दृशिर् – प्रेक्षणे, कर्तरि, लिट्, प्रपु, एकवचनम्।

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः |
स चास्य कथयामास शबरीं धर्मचारिणीम् || १-१-५६
श्रमणीं धर्मनिपुणामभिगच्छेति राघव |

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

महाबाहुः (राघवः) कबन्धं निहत्य तं ददाह । सः च कबन्धः स्वः गतः । राघव ! धर्मनिपुणां धर्मचारिणीं श्रमणां शबरीम् अभिगच्छ इति सः (कबन्धः) अस्य कथयामास ।

- अन्वयार्थः

दीर्घभुजः रामचन्द्रः घोरदर्शनं कबन्धं मारयित्वा अग्नौ अदहत् । स च कबन्धः पार्थिवं शरीरं त्यक्त्वा स्वर्गं प्राप्तवान् । ततः स्वर्गं गच्छन् सः कबन्धः रामाय धर्मचारिणीं शबरीम् अभिगच्छ इति उक्तवान् ।

# तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।
# स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ १-१-५६
# श्रमणीं धर्मनिपुणामभिगच्छेति राघव ।

- पदपरिचयः

- तं – तद् – द् - सर्व- पुं, द्वितीया, एकवचनम् ।
- निहत्य – ल्यबन्तम् अव्ययम् ।
- महाबाहुः – उ-पुं – प्रथमाविभक्तिः, एकवचनम् ।
- ददाह – दह्- कर्तरि- लिट्- प्रथमपुरुष- एकवचनम् ।
- स्वर्– अव्ययम् ।
- गतः– अ- पुं- प्रथमा, एकवचनम् ।
- च – अव्ययम् ।
- सः – तद् – द् - सर्व- पुं- प्रथमा, एकवचनम् ।
- अस्य – इदम्, सर्व, पुं, षष्ठी, एकवचनम् ।
- कथयामास – कथ+णिच् – कर्तरि- लिट् – प्रथमपुरुष- एकवचनम् ।
- शबरीम् – ई- स्त्री- द्वितीया- एकवचनम् ।
- धर्मचारिणीम् – ई- स्त्री- द्वितीया- एकवचनम् - समस्तम् ।
- श्रमणीम् – ई- स्त्री- द्वितीया- एकवचनम् ।
- धर्मनिपुणाम् – आ- स्त्री- द्वितीया – एकवचनम् - समस्तम् ।
- अभिगच्छ – अभि + गच्छ – कर्तरि- लोट् – प्रथमपुरुष- एकवचनम् ।
- इति – अव्ययम् ।
- राघव – अ – पुं – सं – प्रथम – एकवचनम् ।